हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितायां सप्तमाष्टके

पञ्चमः प्रपाठकः ॥ ५ ॥

---

( अथ सप्तमकाण्डे पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः ) ।

अथान्तिमेऽनुवाके सर्वजगदात्मकत्वेनाश्वः स्तूयते । अथवा विराड्रूपेणाश्वोपासनप्रतिपादकोऽयमनुवाकः प्रकरणादुत्कृष्योपनिषदादौ द्रष्टव्यः । अत एव वाजसनेयिन एतदर्थप्रतिपादकं ब्राह्मणमुपनिषदादावामनन्ति ।

पाठस्तु—

**यो वा अश्वस्येति** । यः पुमान्मेध्यस्य यागयोग्यस्याश्वस्य शिरो वेद शिरःप्रभृतीनवयवान्विराडवयवभूतोषःकालादिरूपेणोपास्ते सोऽयं शीर्षण्वानुषःकालादिरूपैः शिरःप्रभृतिभिर्विराडवयवैर्युक्तो मेध्यो यागफलयोग्यो भवति । क्रत्वनुष्ठानस्य चोपासनस्य च समानं फलम् । तथा च पञ्चमकाण्डे समाम्नातम्—' सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद ' इति । तत्र कस्मिन्नश्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते—मेध्यस्याश्वस्य यच्छिरस्तदुषा उषःकालरूपम् । यदश्वस्य चक्षुस्तत्सूर्यः । यस्तदीयः प्राणः सोऽयं बाह्यो वायुः । यत्तदीयं श्रोत्रं सोऽयं चन्द्रमाः । ये तदीयाः पादास्ताः प्राच्या दिशः । ये पर्शवः पार्श्वास्थिविशेषास्ता इमा आग्नेय्याद्यवान्तरदिशाः । यस्तदीयो निमेष उन्मेषसहितस्ते उभे अहोरात्रे । यानि तदीयहस्तपादगतपर्वाणि ते शुक्लकृष्णपक्षरूपा अर्धमासाः । यानि च पर्वणां संधानानि ते चैत्राद्या मासाः । यानि चानुक्तविशेषाणि खुराद्यङ्गानि ते वसन्ताद्या ऋतवः । य आत्मा मध्यदेहः स संवत्सरकालः । ये तदीयाः केशास्ते सूर्यरश्मयः । यदश्वस्य भास्वररूपं तानि कृत्तिकादिनक्षत्राणि । यान्यनुकान्यस्थानि तानि बृहस्पतिशुक्रप्रभृत्याद्याः प्रौढतारकाः । यानि तत्र तत्र स्थितानि मांसखण्डानि तदेतन्नभः । यानि क्षुद्रलोमानि ता ओषधयः । ये वालाः पुच्छगता दीर्घकेशास्ते वनस्पतयः । यदेतन्मुखं संपद्यतेऽयं लोकप्रसिद्धोऽग्निः । यद्व्यात्तं मुखविदारणं सोऽयं वैश्वानरनामको देवताविशेषः । यदुदरं सोऽयं समुद्रः । यः पायुस्तदन्तरिक्षम् । यावाण्डौ ते द्यावापृथिव्यौ । यः शेपः

( अश्वमेधाङ्गमन्त्रकथनम् )

सोऽयमभिषवार्थो ग्रावा। यदेतः स सोमरसः। यज्जम्भते गात्राणि विनामयति सेयं विद्युत्। यद्विधूनुते सशब्दं शरीरं कम्पयति तदेतद्गर्जनम्। यदेतन्मेहनं सेयं वृष्टिः। अस्य हेषाशब्दरूपा या वाक्सेयं वेदरूपा वागेव। जायमानस्य क्रतौ प्रयुज्यमानस्याश्वस्य यः संज्ञपनात्पुरस्तान्महिमाख्यो राजतग्रहस्तदिदमहरेव। एनं पश्चादेतस्याश्वस्य संज्ञपनादूर्ध्वं यो महिमाख्यः सौवर्णग्रहः सेयं रात्रिः। एतावेवोभौ महिमानौ ग्रहावश्वमभितः संबभूवतुरश्वस्य संज्ञपनात्पूर्वं पश्चाच्च व्यवस्थितौ। हयार्ववाज्यश्वा अवान्तरजातिविशेषास्तत्तद्रूपेण देवादीन्वहन्ति। एवंविधस्य विराड्रूपस्याश्वस्य समुद्र एव योनिः कारणम्। सम्यगुद्रवत्युत्पद्यते जगदस्मादिति समुद्रः परमात्मा। नह्यन्यस्मादयं विराडुत्पत्तुमर्हति। स एवास्य बन्धुः स्तम्भः स्थितिहेतुरित्यर्थः। एवमुपासिता पापक्षयद्वारा विराड्रूपं प्राप्नोति। 'तं यथा यथोपासते तथैव भवति' इति श्रुत्यन्तरात्। विराट्प्राप्तिश्च क्रममुक्तिहेतुः। तत्र ज्ञानोत्पत्तौ सत्यां तेन विराजा सह मुच्यमानत्वात्। तथा च स्मृतिः—

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति ॥

एतच्च भगवान्व्यासः 'कार्यात्यये तदध्यक्षेणातः परमभिधानात्' इत्यस्मिन्नधिकरणे महता प्रबन्धेन प्रतिपादयामासेत्यशेषमतिमङ्गलम्।

अथास्य प्रपाठकस्य विनियोगसंग्रहः—

विहितं पञ्चमस्याऽऽद्ये गवामयनसत्रकम्।
तद्द्वैविध्यं द्वितीये स्यात्तृतीये पृष्ठनिर्णयः॥
चतुर्थे व्यत्ययः पूर्वपक्षस्यान्त्यस्य पक्षसि।
पञ्चमे संसवः षष्ठे भवेदुत्सर्गसत्रकम्॥
तन्मीमांसा सप्तमे स्यादष्टमे तु महाव्रतम्।
सामानि नवमे प्रोक्ता वीणाद्या दशमे पुनः॥
दासीनृत्यं ततस्तूर्ध्वं मन्त्राश्चैवाश्वमेधगाः।
पृष्ट्य(ष्ठ्य)न्नहोमाः पञ्चाशदेकपञ्चाशदीरिताः॥
दत्वते परिधीनां तु कस्त्वामन्त्रत्रयं भवेत्।
अभये सर्वपृष्ठेष्टिः प्रयोगोऽनन्तरे श्रुतः॥

( अश्वमेधाङ्गमन्त्रकथनम् )

यः प्राणतो य आत्मेति तावुभौ महिमग्रहौ ।
आ ब्रह्मन्दशभिर्मन्त्रैर्ब्रह्मवर्चसहोमकः ॥
आऽक्रान्नश्वं मन्त्रयेत जज्ञीति(पञ्च)दशभिर्हुतिः ।
आग्ने नैमित्तिका यागा मृगारेष्टिरथाग्नये ॥
अथ सैनतिहोमाः स्युर्दश ये स्वामिवाचनम् ।
[ * नमस्त्रिभिरुपस्थानं यो वै विधिरुपासने ॥
क्रतुराडश्वमेधोऽयं विराड्ध्यानमुपास्तिराट् ] ।
ताभ्यामुत्पद्यते ज्ञानं कृतकृत्यो भवत्यतः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके
पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराज-
परमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे
पञ्चमः प्रपाठकः ॥ ५ ॥

---

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराज-
परमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपाल-
केन सायणाचार्येण विरचिते माधवीये वेदार्थ-
प्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिता-
भाष्ये सप्तमः काण्डः ॥ ७ ॥

---

* धनुश्चिह्नान्तर्गतस्थाने क. पुस्तके ' यौ वा अश्वोपास्तिरित्थं कर्मविधे प्रपञ्चिते '
इत्यर्धमेव विद्यते ।

मूलक्रमेण सप्तमाष्टके--प्र० ५ अ० १७

भाष्यक्रमेण सप्तमकाण्डे-प्र० ५ अ० १७

मूलक्रमेणाऽऽदितः समष्ट्यङ्कः--अष्ट० ७ प्र० ४५ अ० ६५१

भाष्यक्रमेणाऽऽदितः समष्ट्यङ्कः--का० ७ प्र० ४४ अ० ३२६

समाप्तेयं श्रीमत्सायणाचार्यविरचितभाष्यसमेता
कृष्णयजुर्वेदीयतैत्तिरीयसंहिता ॥

